# कविकल्पद्रुमः ।



धातुपाठः ।

श्रीवोपदेवगोस्वामिना विरचितः ।



पण्डितकुलपतिना,
वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
संस्कृतः प्रकाशितश्च ।

तृतीय संस्करणम् ।



कलिकाताराजधान्याम्
सिद्धेश्वरयन्त्रे मुद्रितः ।



ई १९०२ ।



पण्डित कुलपतिः

श्रीजीवानन्द विद्यासागर वि, ए.

PANDIT JIBANANDA VIDYASAGARA, B. A.

Superintendent Free Sanskrit College, Calcutta.

# कविकल्पद्रुमः ।

शब्दाकरकरग्राममर्थमण्डलमण्डलम् ।
ज्ञानात्मानमनाद्यन्तमादित्यं तमुपास्महे ॥

श्रीवोपदेवो धातुपाठं चिकीर्षुः प्रारिप्सितसमाप्तये शिष्टाचारप्राप्तं मङ्गलमाचरति शब्दाकरेत्यादि । तं प्रसिद्धमादित्यम् उपास्महे सेवामहे वयमिति शेषः । तच्छब्दोऽत्र प्रसिद्धार्थकत्वात् यच्छब्दं नापेक्षते तथाच "तं केशपाशं प्रसमीक्ष्य कुर्युर्बालप्रियत्वं शिथिलं चमर्य्यः" इति कालिदासः । ग्रन्थोत्कर्षख्यापनायादित्यस्य ग्रन्थस्वरूपतां प्रतिपादयन् विशेषणान्याह शब्दाकरेत्यादि । शब्दानामाकरः उत्पत्तिस्थानम् आकाशः तत्र करग्रामः किरणसमूहो यस्य तम् अर्थानां प्रयोजनानां मण्डलं समूहो मण्डलं यस्य तम् । तथाच "स्यान्मण्डलं द्वादशराजके च देशे समूहेऽपिच चक्रवाड़" इति विश्वप्रकाशः । तथाच आदित्यात् जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति सूर्य्योदयं विना नैव स्नानादिकाः क्रियाः इति च स्मृतेः, ज्ञानमात्मा यस्य तम् न विद्येते आद्यन्तौ यस्य तं नित्यमित्यर्थः । पक्षे तं प्रसिद्धं पूर्वतरधातुग्रन्थम् उपास्महे आदित्यं सूर्य्यमिव इति लुप्तोपमा । "अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्" इत्यादिवदसाधारणविशेषणैर्विशेष्योपस्थितिर्भवतीति तादृशविशेषणान्याह शब्दाकरेत्यादि शब्दानामकराः उत्पत्तिस्थानानि धातव इति यावत् ते एव करग्रामः किरणसमूह इव इव यस्य तम् अर्थानां मण्डलं मण्डलमिव यस्य तम् उभयत्र लुप्तोपमा ।

ज्ञानात्मानमिति ज्ञायते अनेनेति ज्ञानं ज्ञानसाधनं तदेव आत्मा यस्य तम् अनाद्यन्तमिति वेदाङ्गत्वान्नित्यमित्यर्थः।

इन्द्रश्चन्द्रः काशकृत्स्ना पिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥

सर्वेषां प्रवृत्त्यर्थम् आदिशाब्दिकानां मतमालोक्य क्रियत इति वक्तव्ये आदौ जयशब्दपूर्वकं तन्नामानि संगृह्णाति "जेस्तुवन्त्वोस्तिवन्ती" इति वक्तव्यादन्तुस्थाने अन्तिः जययुक्ता भवन्तु इत्यर्थः।

मतानि तेषामालोक्य सर्वसाधारणः स्फुटः।
धातुपाठः स्वदाद्याद्यक्रमादन्तादिमक्रमः।
कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च।
धातवः पठिताः पाठसूत्रलोकागमस्थिताः॥

अथ ग्रन्थस्वरूपं निरूपयति मतानीति। तेषामष्टानाम् आदिशाब्दिकानां मतानि ग्रन्थानालोक्य पद्यैः श्लोकैः करणैः कविकल्पद्रुमो नाम धातुपाठो निष्पाद्यते क्रियते मयेति यावत्। सर्वेषां प्रवृत्तये विशेषणान्याह सर्वसाधारण इत्यादि। सर्वेषां साधारणः समानः सर्वसम्मतत्वात्। सर्वशब्दस्त्विह बहुवादिपरः तेन कृञ कृतावित्यादीनां केनचिदमन्यमानानामपि बहुवादिसम्मतत्वादिहोपन्यासः कुङ् गत्यामित्यादीनाञ्च केनचिन्मन्यमानानामपि बहुवाद्यसम्मतत्वाद्वर्जनमिति। स्फुटो व्यक्तः। धातवः पठ्यन्तेऽस्मिन्निति धातुपाठो ग्रन्थः। अत् अकार आद्यो येषां ते अदाद्याः ते आद्याः यस्मिन् सोऽदाद्याद्यः स चासौ क्रमश्चेति अदाद्याद्यक्रमः सुष्ठु अदाद्याद्यक्रमो यस्मिन् स स्वदाद्याद्यक्रमः। अत् अन्तो येषां ते अदन्ताः ते आदिमाः आद्याः यस्मिन् सोऽदन्तादिमः अदन्तादिमः क्रमो यस्मिन् धातुपाठे

स तथा पश्चात् कर्म्मधारयः । अकाराद्यादिधातुक्रमेणाकारान्तादिधातवो वक्तव्या इत्यर्थः । अत्रापि सुशब्दोपादानात् सजातीयमध्ये विजातीयो न पाठ्य इत्यधिककौशलमिह बोध्यम् । यत्तु "अथ क्लदष्मङ् चेति क्लदक्लिदिञङ् रुदि" इत्येतयोर्मध्ये क्रन्दादीनां पठनं तत् क्लदि तु रोदने आह्वाने इत्यस्मादादौ "क्लदिञङ् रुदीति" पृथग्वाक्यगौरवभयात् । एवं "स्तृन्ञस्तृताविति स्तृस्तन् प्रीतिरक्षाप्राणने" इत्येतयोर्मध्ये स्रादीनां पाठेऽपि बोध्यम् । कवीनां परस्मैपदादिप्रमाणलिप्सूनां तत्तद्दातृत्वेन कल्पद्रुम इवेति कविकल्पद्रुमः । नामेत्यव्ययम् । अभिधेयमाह अत्र चेति । अत्र ग्रन्थे पाठसूत्रलोकागमेषु स्थिताश्चतुर्विधा धातवः पठिताः पठितुमारब्धाः आदिकर्मणि क्तः साङ्गोपाङ्गैरिहोदिता इत्यमरोक्तवत् । पाठस्थिताः पूर्वाचार्य्याणां धातुपाठेषु स्थिताः भवतिपचतीत्यादयः । सूत्रस्थिता धातुपाठेषु न दृष्टाः स्तभ्नोतिस्कभ्नोतीत्यादयः । लोकस्थिताः धातुपाठेषु सूत्रेषु च न दृष्टाः महाकविप्रयोगेषु दृष्टाः प्रेङ्खोलयत्यान्दोलयतीत्यादयः । आगमस्थिता भाषाविषयेषु धातुपाठसूत्रलोकेषु न दृष्टा वेदेष्वेव प्रयुक्ता जगातिचिकेतीत्यादयः ।

पदानिड्वेड्विकरणाद्यनुबन्धगणोदितम् ।
कर्मोच्चारणमात्रेण स्पष्टमत्रानुबन्धतः ॥

प्रयोजनमाह पदेति । पदे परस्मैपदात्मनेपदे । अनिट् इमोऽभावः । वेट् इमो विकल्पः । विकरणाः शप्श्नादयः । आदिशब्दात् यजादिभ्वादीनां ग्रहणम् । अनुबन्धाश्च गणाश्च तैरुदितम् अनुबन्धगणोदितम् । अत्र ग्रन्थे अनुबन्धोदितं पदानिड्वेड्विकरणादि कर्म्म अनुबन्धतः स्पष्टं गणोदितं

कर्म्म उच्चारणमात्रेण गणोच्चारणमात्रेण स्पष्टं व्यक्तमिति व्युत्क्रमेणान्वयः। यथा ओगम्लृ गत्यामित्यत्र इमोऽभावः ध्यां ङप्रत्ययश्चानुबन्धोदितः। भ्वादित्वं पदस्मैपदञ्च विशेषविधानाभावात् गणोदितमिति।

परोऽनुबन्धः पूर्वेषामेकवाक्यस्थधातुषु।
नाम्रेड़ितानुबन्धेषु न परेषाञ्च मध्यमः॥

अथ परिभाषा भाष्यते पर इति। वाक्यमर्थकथनपर्य्यन्तम्, एकवाक्यस्थितधातुषु परः परधातुस्थोऽनुबन्धः पूर्वतरेण सम्बन्धाभावेऽपि पूर्वेषां सर्वेषामित्यर्थः। यथा टीकटिकढौकत्रौकतिकृङ गत्यामित्यत्र ऋकारङकारौ सर्वेषामिति। एवमङ्काङ्गल्कपदे लक्ष्मणि इत्यत्र अङ्गयतेः परस्थितौ तकारककारावङ्गयते रप्यनुबन्धाविति, अस्यापवादमाह, नाम्रेड़ितेति। "आम्रेड़ितं द्विस्त्रिरुक्तम्" इत्यमरः। पुनरुक्तैकानुबन्धेषु धातुषु नेयं व्यवस्था। तथाच मृषल्क मृष तञ् चान्तावित्यत्र तकारस्य पुनरुक्तत्वात् ञकारो न पूर्वस्य। न परेषाञ्च मध्यमः। मध्यमो धातुद्वयमध्यवर्त्ती अनुबन्धो द्वाभ्यां सम्बद्धोऽपि न परस्य। यथा मृषल्क मृष तञ् चान्तावित्यत्र ककारो न परस्य।

अत्राकारः सुखार्थोऽथानिष्ठभावादिकर्म्मवेट्।
इर्नुम्वानीरनिड्निष्ठ, उः क्त्वावेडूस्तु वेट्क, ऋः।
चङ्यक्ह्रस्वो, ऽथ ऋर्वा, लृरङ्वानिर्वाथ: एः सिचि।
अद्वृद्धिरैर्यजादिः स्यादोर्निष्ठातन, ओरनिट्।
कश्चुरादिः किन्तु वा गः क्र्यादि, गिः प्वादिरप्यपूः।
स स्वादि, र्घो रुदादि, ङस्तङ्वान् कर्त्तरि, ञात्मने।
जो ज्वलाद्यो, ञिरद्यक्त, ष्टुःसाथु, डुं स्त्रिमथ्यु तः।
णः फणादि, स्तस्त्वदन्तो, दस्तनादि, र्ध्रं धादिकः।

नः स्वादिः, पोमुचादि, भः शमादि, मौणिचौषमोः।
दीर्घोवा, णिचि ह्रस्वो, मिर्वा, दिवाद्योयुदादिकः।
लुः स्वपादिश्च, लिङ्गोदिर्वो वृतादिः, श् तुदादिकः।
शिः कुटादिश्च, ष् क्तदङ्वान्, चोजचादौ, र वैदिकः॥

अनुबन्धफलान्याह। अत्राकारः सुखार्थः अत्र अनुबन्धेषु मध्ये अकारः सुखार्थः सुखोच्चारणार्थः। यथा धक्क नक्कक नाशन इत्यादौ। अथ आ निष्ठाभावादिकर्म्मवेट् आ आकारानुबन्धो धातुरुपचारात् एवमिकारादौ च बोध्यम्। निष्ठा क्तक्तवतू, निष्ठाया वाच्यत्वेन सम्बन्धिनी ये भावादिकर्म्मणी तयोः स्थाने वा इट् यस्मात् स तथा। आकारेतो धातोर्भावे आदिकर्म्मणि च विहितयोः क्तक्तवत्वोरिम् वा इत्यर्थः यथा इमिंदास्ने हे "भावादिढे वेति मिन्नं मेदितं तेन" प्रमिन्नः प्रमेदितः सः। भावादिकर्म्मभ्यामन्यत्र क्तक्तवत्वोरिम् नेति शेषः, यथा आदित इति मिन्नः मिन्नवान्। इनुंम्वान् यथा वदिङ् नुत्यभिवादयोः "अतएवेदितो नुण्" वन्द्यते विष्णुः। नकारमध्यापाठेनैवेष्टसिद्धौ इदनुबन्धकरणम् अगुणे नलोपनिषेधार्थम्। ईरनिड्निष्ठः "दीपोङयक्ष्र दीपने" "नेम्डीश्वोति" दीप्तः दीप्तवान्। उः क्त्वावेट् "चमुभचे" "पूक्लिशुदित इति चमित्वा चान्त्वा। ऊस्तु वेट्कः सामान्यविधिना यस्य स्थाने इम् विहितः ऊदितः परस्य तस्य इम् वा। सिधू शिवे शास्त्रे "वेमूदिति" असेधीत् असैत्सीत्। ऋस्त्वह्रस्वः। चङि ञेः परेऽङि नास्ति ह्रस्वो यस्य सोऽह्रस्वः ह्रस्वाभाववान् इत्यर्थः। ढौकृङ् गत्यां "ञग्छुङः स्व" इत्यत्र ऋदिद्वर्जनात् अडुढौकत्। अथ ॠर्वा। चङि अह्रस्व इत्यनुवर्त्तते। कणॄ आर्त्तस्वरे भ्राजभ्राशेति अचीकणत् अचकणत्। येषां

सप्तमस्वरानुबन्धः कैश्चित् पठ्यते कैश्चिन्न पठ्यते च तेषां ह्रस्वविकल्पज्ञापनार्थोऽयमनुबन्धः। लृङ्वान् औगम्लृ गत्यां “शासुलिद्युदिति” अगमत्। ईर्वा अङ्वानित्यनुवर्त्तते च्युतिर् चरणे “इरितस्तु वेति” अच्युतत् अच्योतीत्। अथ एः सिचि अवृद्धिः। सिचि ञ्यां विहिते सौ कटे वृतौ वृषि हसादेःसेम इत्यत्र एदिद्वर्जनात् अकटीत्। ऐर्यजादिः स्यात् यजैञौ “व्यथग्रहेति” इयाज ग्रहस्वपाद्योरिति इज्या। ओर्निष्ठातनः निष्ठायास्तो नो यस्मात्स निष्ठातनः रुञो शौ भङ्गे “सूल्वाद्योरिति” रुग्णः रुग्णवान्। “औरनिट् मस्जोशट्नौ” वसोरस्येत्यत्र औदिद्वर्जनात् अमाङ्क्षीत्। कश्चुरादिः। गणत्क संख्याने “चुर्भ्योः ञिरिति” गणयति। किस्तु वा चुरादिर्वा पक्षे गणान्तरनियमाभावात्सामान्यगणो भ्वादिरित्यर्थः युजकि संयमे योजयति योजति। चुर्भ्योञिर्वा इत्यत्र वा शब्दस्य व्यवस्थावाचित्वात् चुरादेर्ञिर्नित्यः चुराद्यन्तर्गणात् युजादेस्तु वा इति। यत्तु चुरधातोरपि किकारानुबन्धत्वं मुग्धबोधे चोरयति चोरतीत्युदाहरणञ्च तत् कदाचित् चुरादेर्ञेरनित्यत्वज्ञापनार्थम् अतएव काव्यकामधेनौ अकिक् लक्ष्मणेत्यत्र स्फुटोक्तमिदं वोपदेवेन। गः क्र्यादिः, डुक्रीञग द्रव्यपर्य्यये “दिवसुतुदेति” क्रीणाति। गिः प्वादिरपि। अपिशब्दात् क्र्यादिश्च पूञगि शोधे “प्वादेः स्व” इति पुनाति। अपूः स ल्वादिः। पूवर्जितः स प्वादिर्ल्वादिश्च स्यात्। लूञ गि च्छिदि लुनाति। “सूल्वाद्योरिति” लूनः लूनवान्। “कॄग्ज्येति” लूनिः। घोरुदादिः। ञघिर रुद रोदे “रुञ्शोऽयोहस्वेति” रोदिति। “रुदाद्यस्तीति” अरोदीत्। ङस्तङ्वान् कर्त्तरि, कर्त्तरि वाच्ये तङ्वान् 'आत्मनेपदी। एधङ् वृद्धौ “नवशः पमे” इति

एधते। आत्मने। कर्त्तरि तङ्वानित्यनुवर्त्तते आत्मने आत्मार्थं फलवति कर्त्तर्य्यात्मनेपदीत्यर्थः अफलवति परस्मैपदीति शेषः। यजैञो यजते यजमानः यजति याजकः। ञित्त्वान्नवशःपमे ञित इत्यादिनोभयपदप्राप्तौ ञिञ्‌ञन्तपिबेत्यादिना नियम्यते नियमश्च फलवत्कर्त्तर्य्येवात्मनेपदमिति चेत्तर्हि अफलवत्कर्त्तर्य्यात्मनेपदनिषेधे फलवत्कर्त्तरि परस्मैपदापत्तिः कथं न स्यात्। फलवत्कर्त्तर्य्यात्मनेपदमेवेति चेत् तर्हि फलवत्कर्त्तरि परस्मैपदनिषेधे अफलवत्कर्त्तर्य्यात्मनेपदापत्तिः कथं न स्यात् इत्युभयथैव व्याघातः। वस्तुतस्तु उभयपदप्राप्तौ व्यवस्थेयं फलवत्यात्मनेपदम् अफलवति परस्मैपदमिति। एतच्च पाणिनेरनुरोधात् तथाच वर्धमानः। इति लौकिकवाक्येषु व्यभिचारोऽतिपुष्कलः। वेदवाक्येषु यद्यस्ति नियमः सैव धार्य्यते। विशेषः पाणिनेरिष्टः सामान्यं सर्ववर्मणः। सामान्यमनुगृह्णाति तत्राचार्य्यपरम्परेति। एतेन "अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात्" इति रघुः। "तनोति शुभ्रं गुणसम्पदा यशः" इत्यादौ फलवत्कर्त्तरि परस्मैपदम्। फलं विश्वोपकाराय धत्ते पर्वणि पर्वणीति"। "कमलवनोद्घाटनं कुर्वते ये"। ये सूर्य्यरश्मयः इत्यर्थः। इत्यादावफलवत्कर्त्तर्य्यात्मनेपदमिति। चुरादेस्तु स्वार्थे विहितञेर्ञकारेण ञित्त्वेऽप्युभयपदं न स्यात् अन्यथा ष्मञक्‌वितर्के इत्यादेर्ञानुबन्धो वृथा स्यात्। यत्तु धातुपारायणमुग्धबोधयोश्चोरयति चोरयते इत्युभयपदोदाहरणं तत् कदाचिन्महाकविप्रयुक्तस्यात्मनेपदस्य समाधानार्थम्। यथा नैषधे। "नालोकते यथेदानीं मामियं तेन तर्कये" इति। अत्र तर्कये इति आत्मनेपदम्, केचित्तु "आत्मनेपदमिच्छन्ति

परस्मैपदिनां क्वचित्” इति न्यायमवलम्बन्ते। ञो ज्वलाद्यः। ज्वल जम चलत्विषोः “दूनीभूज्वलाद्येति” ण प्रत्यये ज्वालः पक्षे पचादित्वादनि ज्वलः। एवं कुच क्रोधपर्कंकौटिल्य-लेखने दूनो भूज्वलेति णः कोचः पक्षे कृगृज्ञापीति कः कुचः। ञि: अद्यक्तः अद्य वर्त्तमाने क्तो यस्मात् सोऽद्यक्तः। ञिष्ठा स्थाने “ज्ञार्च्चेच्छार्थेति” स्थितो विष्णुस्तिष्ठतीत्यर्थः। टुः साथुः। अथुना सह वर्त्तते असौ साथुः ऋटुङ वेप चले “ट्वितोऽथुरिति” वेपथुः। डुस्त्रिमग्युतः। कृञदडु कृतौ “ड्वितस्त्रञ्” इति त्रिमक् कृत्रिमम्। णः फणादिः फणण निस्नेहे “तृफलेति” फेणतुः पफणतुः फेणिथ पफणिथ। तस्त्वदन्तः। अदन्तानां पृथग्वर्गविधानेनैव ज्ञाने सिद्धे तानुबन्धोऽङ्कादीनां कान्तत्वादिभ्रमनिरासार्थम्। दस्तनादिः। तनुदञ विस्तृतौ। “तन्भ्यः श्नुविति” तनोति। “सेर्लुक् तथासोरिति” अतत अतनिष्ट अतथाः अतनिष्ठाः। “वनत-नाद्यनिमामिति” प्रतत्य। ध् रुधादिकः। रुधिर्धौञि आवृतौ “दिवसुतुदेति” रुणद्धि। नः स्वादिः। षुञ् सन्धा-क्लेदपीडमन्थे “दिवसुतुदेति” सुनोति। पो मुचादिः। मुच लृषपञो मोचे “नुण्रधोमुचामिति” मुञ्चति। भः शमादिः शमुभिर्य्य शमे “यन्योशमादीति” शाम्यति। मोणिचोस्त्र-मोर्दीर्घो वा। घटष्ङम चेष्टे “ञोसमोस्तुर्घश्चेति” अघटि अघाटि घटम् घटम् घाटङ्घाटम्। णिचि ह्रस्वः मोऽनुवर्त्तते णिचि ञौ परे ह्रस्वो ह्रस्ववान्। “घटादिजनीति” घटयति। मिर्वा। णिचि ह्रस्व इत्यनुवर्त्तते। फणमिण गतौ ‘वा शमेति” फणयति फाणयति। दिवाद्यो यः। दिव्यु जिगीषादौ “दिवसुतुदेति दीव्यति। ल् अदादिकः। अद्लीभक्षणे “लुगद्भ्योऽपः” अत्ति। लुः स्वपादिश्च। चकाराददादिश्च

स्वमते स्वपादेः प्रयोजनं नास्ति। दरिद्रतीत्यादौ स्वपादित्वादजादौ सार्वधातुके आद्याच्चरस्य उदात्तस्वरत्वम्भवति आद्युदात्तत्वमिति वोपदेवः। लिह्वादिः। ह्वादेरदाद्यन्तर्गणत्वेन ख्यातत्वाददादित्वसूचकानुबन्धो न कृतः। अथवा लुः स्वपादिश्च लि ह्वादिरित्येकं वाक्यम्। लु लिः इत्युभयानुबन्धौ धातू क्रमात् स्वपादिह्वादौ स्तः काकाक्षिगोलकन्यायेन चकारस्योभयसम्बन्धाददादौ च इत्यर्थः। ह्वादिः पृथग्गण इत्येके अतएव पठन्ति च।

भ्वाद्यदादौ जुहोत्यादिर्दिवादिःस्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादिचुरादय इति"। हुलि होमेऽदने "ह्वादौ रे द्विः" जुहोति। वोवृतादिः। वृत ङुव लृ वर्त्तने "वृद्भ्योनेम्ये इति" तेनैव परस्मैपदे वर्त्स्यति विवृत्सति आत्मनेपदे तु वर्त्तिष्यते अन्यत्र विवृत्सा विवर्त्तिषा। श तुदादिकः तुद ञौश व्यथे "दिवसुतुदेति" तुदति। शिः कुटादिश्च। चकारात्तुदादिश्च। "कुटां णुञ्जो ञ्णितीति" नियमात् कुट शि कौटिल्ये इत्यादीनाम् अकुटीदित्यादौ न गुणः। नूशि स्तवने इत्यादीनाम् अनुवीत् इत्यादौ न वृद्धिः अगुणत्वादुव् च। षक्तदङ्वान्। आख्यातिकस्य ङोऽप्राप्त्यर्थं क्तदिति विशेषणम्। स्वमते तूभयत्र ङ एव। डुञौ ष पच पाके "भीषिचिन्तीति" पचा। चोजक्षादिः। जक्ष क्लुष भक्षहासयोः "द्विरुक्तजक्षेति द्विसंज्ञायाम्। शत्रन्तस्य "त्रिदचोऽद्वेरिति" न नुण् तेन जक्षत्। क्लीवे जस्शसोस्तु 'द्वेः शतुरिति। जक्षति जक्षन्ति। आख्यातिकेऽन्तौ "अन्तोऽद्वे" रिति जक्षति। "अनुस्सिद्वेरिति" अजक्षुः। र वैदिकः। वैदिको वेदेष्वेव प्रयुक्तो न तु भाषायामित्यर्थः। गालिंस्तुतौ जगाति।

धातवो हन्ति भाषार्था अकितो वा चुरादयः।

इत्यनुबन्धेन फलं निरूप्य अर्थेनैव प्रयोजनं प्रथयति धातवः इति। हन्त्यर्था हिंसार्था हन्तेर्हिंसार्थ एव प्रसिद्धत्वात्। भासार्था दीप्त्यर्थाः। घटि क्वपि द्युतावित्यत्र द्युत्यर्थत्वेऽपि क्विकरणमर्थान्तरार्थमिति वोपदेवस्वरसात्। हन्त्यर्था भासार्थाश्च ये धातवः तेऽकितोऽपि गणान्तरपठिता अपि वा चुरादयः स्युः। वाशब्दस्यानुक्तसमुच्चयार्थत्वात् कदाचिदन्येऽपि चुरादयः स्युरित्यर्थः। एवमेव धातुपारायणक्रमदीश्वरौ। यथा हन्लौ गतौ बधे घातयति हन्तीत्यर्थः। शुभ ङलृ दीप्तौ शोभयति शोभते इत्यर्थः। दीप्त्यर्थस्य पाक्षिकचुरादित्वं सर्वैर्नमन्यते अन्येषान्तु चुरादित्वं "इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत्," इति भट्टवार्त्तिकम्। "दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषम्" इति कालिदासः। "कोकिलो विष्णुरूपेण राजकन्यामजीहरत्" इति पञ्चतन्त्रम्। "दशवर्षसहस्राणि रामो राज्यमकारयदिति," व्यासः।

क्रादिः कॄगॄदृङ्धृ प्रच्छो मुह् द्रुह् ष्णुह् नश्ष्णिहः।
मुहादिर्डिद्वलन्तोऽनुदात्तेदल्ङिद् द्युतादिकः॥

अथ स्वरूपेण फलं निरूपयति क्रादिरिति। कॄश विक्षेपे, गॄश निगरणे दृङशादरे, धृशङस्थितौ, प्रच्छौश ज्ञीप्सने इति पञ्च। फलन्तु एभ्यः सन इमि चिकरिषतीत्यादि। स्वमते "स्मिङपूङरन्जश्वित्यादिसूत्रे" एषां ग्रहणात् क्रादेः फलाभावः। मुहादिरिति। मुह्यॣलृञि वैचित्त्ये, लृद्रुह्यॣजिघांसे, ष्णुह्यॣलृ उद्गारे, नश ल्यॣ नाशे, ष्णिह्यॣल्ञि प्रीतौ। फलन्तु "मुहां घङ् वेति," मुक् मोग्धा। "होढो भाविति" मुट् मोढा इत्यादि। द्रुहस्तु घङोऽप्राप्तिपक्षे होढोभावित्यनेन ढ एव न तु "दादेर्घ"

इत्यनेन घः अन्यथा दादेर्घ इत्यनेनैवेष्टसिद्धौ मुहादावस्य पाठो व्यर्थः स्यात्। ङिद्धलन्तोऽनुदात्तेत् ङानुबन्धो हलन्तो हसन्तो यो धातुः सोऽनुदात्तेत् अनुदात्तस्वरानुबन्धः परिभाषित इत्यर्थः। तेषां वेदेष्वेवोच्चारणभेदोऽस्तीति फलम्। आत्मनेपदञ्चेति केचित्। लृङिद्द्युतादिकः इत्युभयानुबन्धो धातुर्द्युतादिः स्यात्। द्युत् लृङ द्युत्यां "शासु लिद्द्युदिति" परस्मैपदे अद्युतत्। लिदित्यनेनैवेष्टसिद्धौ द्युतादिपाठः प्राचामनुरोधात्।

श्विश्रिडीशीयुरुनुस्नु, क्षुक्ष्णु, वृङ्वृञ्विवर्जिताः।
एकस्वरा आदिवर्णा इदन्ता धातवोऽनिटः॥

इति परिभाषा।

---

ट्वायोश्वीर्गतिवृद्ध्योः, श्रिञ सेवने, ओ डीङ य गतौ डीङ च नभोगतौ, शीङ लञि स्वप्ने, युल मिश्रणे, रुल ध्वनौ, रुङ वधे गत्यां, ष्णु ल प्रस्नुत्यां, क्ष्णु ल तेजने, टुक्षुल क्षुते, णु ल स्तुतौ, वृङग सम्भक्तौ, वृनगञ वृतौ। वृ इत्यनेनैवेष्टसिद्धौ उभयग्रहणं स्वरूपस्य कस्यचिदप्राप्त्यर्थम् तेन युङगबन्धे इत्यस्मादिम् न स्यात्। श्व्यादिवर्जिता एकस्वरा ये आकारान्ता इवर्णान्ता उकारान्ता ऋकारान्ताश्च धातवः तेभ्यः सामान्यविधानादिम् न स्यात्। यथा नेमिकाजाद्युद्वत इति। पाता जेता क्रेता श्रोता कर्त्ता। विशेषविधानात्तु स्यादेव यथा यमरमनमेति अपासिष्टाम्। सुस्तुधोः सेरिम्पे इति असावीत् अस्तावीत् अधावीत्। स्यस्यड्वन इति करिष्यति। श्व्यादेस्तु श्वयितेत्यादि। इति परिभाषेति वक्ष्यमाणग्रन्थस्य सङ्क्षेपनिर्वाहार्थं सङ्केतविशेषः परिभाषा इत्यर्थः।

अथ धातवो निर्द्दिश्यन्ते । तत्रादावदन्ताः तेषु च ञप तञ् वर्जेषु ककारोऽनुबन्धः सर्व्वेषु तकारः । ननु हसाल्लोप इत्यनेनाल्लोपस्य नित्यत्वाददन्तत्वं व्यर्थमिति चेन्न यतः

अग्लोपित्वं स्थानिवत्त्वञ्चादन्तत्वप्रयोजनम् ।
यत्र त्वेते न विद्येते तत्राग्लोपविकल्पनम् ।
तद्बलादन्त्यदीर्घश्च पुक् चेत्यङ्कापयत्यत इति ॥

यथा अग्लोपित्वेन अजगवेषदित्यादौ न ह्रस्वसन्वद्भावौ । लोपोऽप्यादेश उच्यते इति न्यायात् स्थानिवत्त्वेन कुणयती त्यादौ न गुणः गणयतीत्यादौ न वृद्धिः । यत्र तु एते न विद्येते अग्लोपित्वस्थानिवत्त्वयोः प्रयोजनं न सम्भवति तत्र धातौ तद्बलाददन्तत्वस्वीकारबलात् अग्लोपविकल्पनम् अकारस्य स्थितिपक्षे दीर्घः पुक् च आदन्तात् पन् च स्यादतोऽङ्का-पयतीति सिद्धमिति केचित् । स्वमते तु अग्लोपित्वस्थानि-वत्त्वयोः कार्य्यं येषु न स्यात् ते धातवो हसन्ता एव मन्तव्याः तेन अङ्कापयतीत्यादिप्रयोगाः स्वमतविरुद्धा इति बोद्धव्यम् । न च स्वमतविरुद्धानामिहोपन्यासोऽपि विरुद्ध इति वाच्यम् अष्टानां मतान्यालोक्य कर्त्तव्ये परमतोपन्या-सेऽपि दोषाभावात् अन्यथा कैश्चिदमन्यमानस्य क्नञ् कृताविति भौवादिकस्य पाठो विरुद्धः स्यात् । किञ्च यदि तत्तन्मतैकवाक्यता क्रियते तदाग्लोपविकल्पोऽन्त्यदीर्घश्च मनी-षादित्वात् साध्यः । यथा अङ्कधोर्ञिः हसाल्लोप इति अल्लोपः टौविभक्तेर्दिः जिश्चेत्यङ्—

"नकारजावनुस्वारपञ्चमौ झलिधातुषु ।
सकारजः शकारश्च षाट्टवर्गस्तवर्गजः" ॥

इति वचनात् ङस्य नप्रकृतित्वे स्यादौ नवद्र इति ङकारं हित्वा कि इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे

नैमित्तिकस्याप्यभावः इति ङस्य नत्वे नस्यानुस्वारे तस्य च ञत्वे आञ्चिकदिति। केचित्तु अङ्क इति ङप्रकृतिं मन्वानाः अङ्कि इत्यस्य ङ्केर्द्वित्वे आङ्किकदित्याहुः। अत्र ह्रस्वसन्वद्भावयोरसम्भवः। अग्लोपित्वस्य गुणवृद्धेरसम्भवात् न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽपि अकारलोपस्य स्थानिवत्त्वं मन्वानाः क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत् कार्य्यम् इत्यत आञ्चकदित्युदाहरन्ति।

---

## अकारान्तवर्गः।

अङ्काङ्क त्क पदे लक्ष्मण्यंशांस त्क विभाजने।
अर्थ त्कङ् याचनेऽन्ध त्क दृक्क्षयेऽघ त्क तत्कृतौ॥
अवधीर त्क वज्ञायामान्दोल त्क तु दोलने।
ऊन त्क परिहाणे स्यादोज त्क बलतेजसोः॥
कथ त्क वाक्यप्रबन्धे कल त्क गतिसङ्ख्ययोः।
स्यात्कर्त्त कत्र कर्त्त त्क शैथिल्ये कर्ण तक् भिदि॥
काल त्क कालोपदेशे कुण त्काभाषमन्त्रयोः।
स्यात् कुमार कुमाल त्क केलौ केत त्क मन्त्रणे॥
निश्रावणेऽथ कूण त्क सङ्कोचेऽथ कुह त्काङ।
विस्मायनेऽथ कूट त्क दाहे मन्त्रे क्षप त्क तु॥
दौर्बल्ये च्चप तक्म स्यात् क्षेपे खच त्क बन्धने।
खोट खोड़ त्क क्षेपे खेट खेड़ त्क भक्षणे॥
गद त्काभ्रध्वनौ गर्व त्कङ् दर्पेऽथ गृह त्काङ।
ग्रहे गण त्क सङ्ख्याने गवेष तक मार्गणे॥
गोम त्क लेपने गात्र त्कङ् शैथिल्ये गुण त्कतु।
मन्त्रे गह त्क गहने चित्र त्क चणिकेक्षणे॥

लेख्येऽद्भुते चह तृक स्यात् शाठ्ये छद तृक संवृतौ ।
छिद्र तृक भेदे छेद तृक छेदे तीर तृक कर्म्मणाम् ॥
समाप्तावथ तूण तृक सङ्कोचे तुत्थ तक् स्तृतौ ।
दुःख तृक तत्कृतौ दण्ड तृक तत्पाते ध्वन तृक तु ॥
शब्दे निवास तृक स्तृत्यां प्रेङ्खोल तक चापले ।
पट तृक वेष्टने पर्ण तृक हारित्ये पद तृकङ ॥
गतौ पश पष तृकानुपसर्गाद्बन्धबाधयोः ।
स्पर्शगत्योः पत तृकैश्वर्यगत्योः पार त्क तीरवत् ॥
पल्यूल पल्युल त्क स्यात् लूनिपूत्योः पुट त्क तु ।
संसर्गे पक्ष त्क परिग्रहे भाम त्क कोपने ॥
भाज तृक तु पृथक्कृत्यां मृग तृकाङ तु मार्गणे ।
मह तृक पूजे मूत्र तृक प्रस्रावे मन तक् धृतौ ॥
मृष तृक मृष तञ् चान्तौ मिश्र तृक् यूत्यां रह तृक तु ।
त्यागे रस तृक त्वास्वादे स्नेहे रूप तृक तत्कृतौ ॥
रच तृक कृत्यां रूक्ष तृक पारुष्ये रंह तक् गतौ ।
रूष तृक स्याद्विस्फुरणे लज लञ्ज तृक भासने ॥
लड लाड तक चेपे लल तृकेप्से वर तृक च ।
वर्ण तृक स्तुतिविस्तारशुक्लाद्युक्तिदीपने ॥
वम तृक वासे वास तृकोपसेवायां व्यय तृक तु ।
गतौ विच्छ तृक च त्यागे वात तृक गतिसेवयोः ॥
सुखे वेल तृक कालार्थे वृच तृक दृष्टि वरट तक् ।
भागे वट तृक वेष्टे च वल्यूल वल्युल तृक तु ॥
पल्यूलार्थेऽथ वीज तृक व्यजने वीर तङ तु ।
शौर्य्ये व्रण तृकाङ्गचूर्णे श्रथ शार स्लथ तृक तु ॥
दौर्बल्ये श्याम तक् रूक्षे शूर तृकाङ् विक्रमे शठ ।
शंठ त्क दुर्वाचि शील्तकाभ्यासेऽतिशायने ॥

षम ष्टम तृक वैक्लव्ये सान्त्व साम तृक सान्त्वने ॥
संग्राम ङ्ञतक् युद्धे स्पृह तृकेप्से साट तृक तु।
प्रकाशने सभाज तृक सेवने प्रीतिदर्शने ॥
स्थूल तृकङ् बृंहणे सूत्र तृक ग्रन्थे सत्र तङ्क तु।
सम्बन्धे सन्ततौ सूच तृक पैशुन्ये स्वर तृक तु ॥
आक्षेपे स्तेन तक् चौर्ये स्तोम तृक श्लाघने स्तन तृ।
कात्रशब्दे सार तक् दौर्बल्ये सुख तृक तत्कृतौ ॥
स्फुट तृक स्याद्विसरणे स्कन्ध तृक तु समाहृतौ।
स्वन स्यम तकध्याने हिन्दोल तक दोलने ॥
इत्यकारान्तधातूनां सद्वाविंशच्छतं मतम्।

---

आकारान्तवर्गः।

ख्या ल् ख्यातौ कथने गालिं स्तुतौ जन्मनि गा ङ्गतौ।
घ्रा गन्धग्रहणे ज्या गि जरायां ज्ञा ग बोधने ॥
ज्ञा क्ष मारण आलोके निशाने तोषणे स्तुतौ।
त्रा क् प्रेरणे दा ल लूनौ दा तु दाने डु दा ञ्लि च ॥
दरिद्रा च लु दुर्गत्यां द्रा ल स्वप्ने पलायने।
डु धा ञ्लि धारणे पुष्टौ दाने ध्मान्मियुतौ ध्वनौ ॥
प्सा ल भक्षे प्रा ल पूर्तौ पा पाने पा ल रक्षणे।
भा ल्ष दीप्तौ मा ङ्लि शब्दे मा ल्च मानेऽथ मा ङ्य च ॥
म्नाभ्यासे या ल्गतौ रा ल दाने ला ल् च ग्रहेऽथ वा क्।
सुखाप्तिगतिसेवासु स्याद्वा ल् गमनहिंसयोः ॥
श्रा ल् खेदे श्रा ल्म पाके ञि ष्ठा स्थाने ष्णा ल शोधने।
ओ हाक्लि त्याग ओ हाङ्लि गतावान्तास्त्रिरष्टधा ॥

---

## इकारान्तवर्गः।

इ इ ल् गतावधी ल् स्मृत्यामधीङ्ध्ययने किं लि।
ज्ञाने चि नृग ष हिंसायां चि चयैश्वर्ययोः चि ग ॥
वासगत्योश्चिरिन् हिंसे चिन् चिञ् चित्यान्तु चिक्कि च।
जिरिन् हिंसे ज्यभिभवे जि जये चाथ धि ग् धृतौ ॥
पि ग् गतौ डुमि ञन् क्षेपे रिग् गतौ श्रि ञ सेवने।
शि नञ् निशाने ट्वायोश्वीर्गतिवृद्ध्योः षि ङ स्मिते ॥
षि नृगञ् बन्धे स्मि कङ नादरे हिन् वर्द्धने गतौ।
एकोनविंशतिरमी इकारान्तास्तु धातवः ॥

---

## ईकारान्तवर्गः।

ई ल कान्ति-गति-व्याप्ति-क्षेप-प्रजन-खादने।
ई ङ्य गत्यां क्षी ञ हिंसे डु क्री ञग् द्रव्यपर्य्यये ॥
ज्री गि कि ज्यान श्रो डी ङ्य गतौ डी ङ्च नभोगतौ।
णी ञ प्रापण श्रो दी ङ्य क्षये दीधी ङ् च् लु देवने ॥
दीप्तावोधी ङ्य श्राराधे नादरे प्रीञ तर्पणे।
प्री कुच प्री गञ कान्तौ च प्री ङ्य प्रीतौ तु पी ङ्य तु ॥
पाने ञि भी लि भीत्यां भ्री ग गि भृत्याञ्च मी ङ्य श्रो।
मी ञ ग् बधे मी कि गत्यां मत्यां री गि रवे गतौ ॥
श्रो री ङ्य चरणे ली कि द्रावणे ली ङ्य श्रो श्लिषि।
ली ल्पी गिं च ल्वी ग्गि गत्यां वेवी च्लुङ् वी ल ईलवत् ॥
व्री ग्गि हृत्यां व्रीङ् य श्रो च व्ली मि गत्याञ्च शी ङ्जि।
स्वप्ने श्री ञ ग् पचि ह्री लि लज्जेऽमी पञ्चविंशतिः ॥

---

## उकारान्तवर्गः।

उ ङ शब्दे ऊर्णु लञाच्छादने टु क्षु ल क्षुते।
कु ङ् शब्दे कु ल्च् कुशि ङार्त्तस्वरे क्ष्णु ल तेजने॥
खुङ् ध्वनौ गुशि ञो विष्ठोत्सर्गे गु घु ङु ङ ध्वनौ।
च्यु क् हासे सहने च्यु छ्यु ज्यु जु ङ् गत्यां जु रंहसि॥
णुल् स्तुतौ तु ल् वृत्तिहिंसापूर्त्तिषु द्रु स्तुतौ गतौ।
द्रु ञ्ञ दु ट्वोऽनुतापे दु गतौ द्यु लभिसर्पणे॥
धु ञ्न कम्पे ञि ध्रु शि भ्रु स्थैर्य्ये प्रु प्लु ङ् च सर्पणे।
यु ल् मिश्रणेऽमिश्रणे युञ् ग बन्धे युङ्क निन्दने॥
रु ल् ध्वनौ रु ङ् बधे गत्यां श्रु गतौ श्रु न् गतौ श्रुतौ।
षु ञ्न सन्धाक्लेदपीडामन्ये षु ञ गतौ षु च॥
षु ल्चैश्वर्य्यप्रसवयोः ष्णु ल् प्रस्नुत्यां ष्टु ञ ल् स्तुतौ।
स्तु प्वर्थे सु ञ् गतौ स्कु ग्न ञु दृतौ स्तु द्रुवत् हु लि॥
होमेऽदने ह्नु ङ्लु चौर्य्ये त्रयस्त्रिंशदुदन्तकाः।

---

## ऊकारान्तवर्गः।

कू शि ङार्त्तस्वरे क्नू ञ्ग शब्दे गू ञो शि विट्सृजौ।
णू शि स्तवन ञो दू ङ्य खेदे दू न् गञ् बधे गतौ॥
धू शिक् कम्पे धून्गि धूञच् पूङ् शोधे पू ङ्य पूञ् गि च।
ब्रू ल ञुक्तौ भू कङ् भू ञ प्राप्तौ भू क् शुद्धिचिन्तयोः॥
मिश्रणे भू तु सत्तायां मू ङ बन्धे लू गिञ् छिदि।
षू ङ्ल षू योङ सूतौ षू श् क्षेपे ऊतस्त्रयोदश॥

---

ऋकारान्तवर्गः ।

ऋ नं हिंसे ऋ लिं गत्यामृ प्रापे च कृ ञन् वधे ।
कृ ञ् कृतौ कृ ञ्द डु च गृ घृ सेके घृ लिं भासि च ॥
घृ क् सेके छादने जृ न्यक्कारे जागृ च्लु जागरे ।
दृ ङ् शादरे दृ स्थगने ध्वृ कौटिल्ये धृ श ङ् स्थितौ ॥
धृ ञ धृत्यां धृ क्च धृ ङवध्वंसे पृ लि पालने ।
पृ क्च पूर्त्तौ पृ न प्रीतौ पृ शङ् व्यायामके भृ लि ॥
टुडु भृ ञ् भृतिपुष्ट्योर्मृ शङ् मृतौ वृ ग्न वृ ञ् वृतौ ।
वृ क् चाथ वृ ङ्क सम्भक्तौ स्वृ ऊ शब्दोपतापयोः ॥
स्तृ नञ् स्तृतौ सृ क्च सृ लिं सृ गतौ स्मृ स्मृतौ स्मृ म ।
औत्क्ये स्तृ स्पृ न् प्रीतिरक्षाप्राणने ह्वृ ध्वृवत् हृ लि र् ॥
प्रसह्यकृत्यां हृ ञ् हृत्यामृदन्तास्त्वेकविंशतिः ।

---

ॠदन्तवर्गः ।

ॠ गि गत्यां कॄ ञ्गि हिंसे कॄ श विक्षेपेऽथ कॄ कङ ।
विज्ञाने गॄ ङ्क विज्ञापे च गॄ श निगरणेऽथ गॄ ॥
गि शब्दे जॄ गि कि ज्याने जॄ ड्रषंस्य च भॄ ष्य च ।
तॄ तरेऽभिभवे ष्ठु त्यां दॄ गि दॄ म् भिये दॄ य गि ॥
विदारे नॄ गि नॄ म् नीतौ ञि पॄ गि लि तु पालने ।
पॄ क्च पूर्त्तौ बॄ गि वृत्यां भृत्यां भॄ गि भृतौ भृजि ॥
भर्त्से मॄ गि वधे वॄ गिञ् वृत्यां शॄ स्तॄ गि हिंसने ।
स्तॄ ञगि च्छादने प्रोक्ता ॠकारान्तास्तु षोड़श ॥

---

एकारान्तवर्गः ।

दे ङ् पालनेऽथ धे ट् पाने मे ङ् प्रतिदानए ञ वे ।
स्यूतौ व्ये ञै हृतौ ह्वे ञै स्पर्द्धे शब्दे षड़ेपराः ॥

## ऐकारान्तवर्गः।

कै शब्दे दै चये खै तु स्थैर्ये खननहिंसयोः।
गै गाने ग्लै क्लमेऽथो जै चये त्रै ङ् पालनेऽथ दैप्॥
शोधने दै न्यक्करणे द्रै स्वप्ने ध्यै तु चिन्तने।
ध्रै तृप्तौ प्यै ङ वृद्धौ पै शोषे म्लै कान्तिसंक्षये॥
रै शब्दे श्रो वै शोषे श्रै खेदे श्रै म् पचने मतः।
ष्ट्यै ङ् गतौ षै चयेऽथ स्नै वेष्टे स्त्यै संहतौ ध्वनौ॥
स्त्यै च स्रै पचि सै चित्यामैदन्ताः पञ्चविंशतिः।

---

## ओकारान्तवर्गः।

क्नो य् लूनौ ज्योङ् नियमव्रतादेशोपनीतिषु।
दो य च्छेदे शो य् निशाने षो य् नाशे पञ्च ओपराः।
इत्यजन्ताः।

---

## कान्तवर्गः।

अकि क् लक्ष्मण्यकि ङ् गत्यां चाक् म वक्रगतेऽर्क क।
तापस्तुत्योः कक्क हासे कक् ङिच्छागर्वचापले॥
ककि ङ व्रजने कुक् ङ त्वादाने किष्क कङ् बधे।
चक्क ञ ञ प्रतीघाततृप्त्योः चीक कि मर्षने॥
चक्क चिक्क चुक्क कर्त्तौ टकि क् बन्धेऽथ टीक टिक्।
ढौक चौक तिकृ ङ् गत्यां तिक् नास्कन्दे बधे तकि॥
दीप्त्यां तक् सहने हासे तर्क क् दीप्तौ त्वकि ङ् गतौ।
द्रेक ध्रेकृङ् स्वनोत्साहे धक्क नक्क क नाशने॥

निष्क क् ङ माने फक्कासद्व्यवहारे शनैर्गतौ ।
बुक्क कि श्वादिशब्देऽथ मस्क मक्क ङ् गतौ मकि ङ् ॥
भूषे रेकृङ शङ्कायां रक् लक क् स्वाद आपने ।
लोकृ क् दीप्तौ लोकृ ङीक्षे वस्क वक्क ङ् गतौ वकि ङ ॥
कौटिल्येऽपि च व्रक् ङ त्वादाने वल्क क भाषणे ।
शक ञ्य शक् निरू शक्तौ शकि ङ त्रासशङ्कयोः ॥
शृक् स्रक् श्वकि ङ शुक् सर्पे शीक्ष ङ् सेके च शीक कि ।
आमर्षे च श्लोक्ष ङ सङ्घाते शुल्क क् च सर्जने ॥
वर्ज्जने श्वल्क क् च भाषे षेक्ष ष्वक्क ङ सर्पणे ।
ष्टक् स्तक म प्रतीघाते सीक क्याम्टशि सीक्ष ङ ॥
सेके स्रकि स्वस्क ङ च गत्यां स्रेक् सेक्ष ङित्यपि ।
हिक्क ञ् कूजेऽथ हिक्क क् ङ हिंसे कान्तोनषष्टिका ॥

---

## खान्तवर्गः ।

इखिखीख्युख्युख गतावोखृ शोषालमर्थयोः ।
कख् मे कक्ख खक्ख हासे णख् गतौ द्राख ध्राखृ तु ॥
ओखार्थे नख् मख मखि रखि रख् रिखि सर्पणे ।
राख् लाखृ ओखृवल्लिख् श लेखने लिखि लख् लखि ।
वखि वख् स्तपि शाख् श्लाखृ व्याप्तौ खान्तैकविंशतिः ॥

---

## गान्तवर्गः ।

अग्म वक्रगतेऽगी गि गत्यां कग् मे क्रियासु तु ।
जुगि त्यागे त्वगि गते त्वगि कम्पे गते तगि ॥
स्खलने च तिग् न हिंसास्कन्दयोर्म्नगि सर्पणे ।
मार्ग क् संस्कारे च मार्गः अन्वेषे युगि वर्ज्जने ॥

रग् मे शङ्के रग क् रक्षत् रग् रिग् लिगि गतौ लिगि क् ।
चित्रे लगि गतौ खञ्जे लग् मे सङ्गे लग क् रक्षे ॥
वगि खञ्जे वुगि त्यागे वल्ग श्रगि स्लगि व्रजे ।
षग ष्टग सग स्थग् मे संवृतौ स्लगि सर्पणे ॥
ह्रग ह्लग् मे संवरणे गान्ताः स्युः सप्तविंशतिः ।

---

घान्तवर्गः ।

अर्घ मूल्ये ऽघि ङ गतौ निन्दारम्भजवेष्वथ ।
स्यादग्घ घग्घ हसने चघ तिघ् दघ्न घातने ॥
दघि त्यागे ऽवने द्राघृ ङ श्रमायामशक्तिषु ।
ङ श्राघृ शक्तौ मघि ङ कैतवाश्चर्ययोर्मघि ॥
भूषे रघि क् भासि रघि ङ् गमने राघ लाघृ ङ ।
शक्तौ लघि ङ्भुग्गत्योर्लघि शोषे लघिक् त्विषि ॥
वघि ङ्ङ्घ्यर्थके शिघ्याघ्राणे श्लाघृ ङ कत्थने ।
ष्टिघ्न ङास्कन्दि षघ् सघ्न हिंसे घान्तास्तु विंशतिः ॥

---

चान्तवर्गः ।

अर्च क् पूजे अर्च चाचि चाचि अच् ञु गतेऽञ्चु च ।
श्लिष्टोक्तौ चाञ्च क व्यक्तौ वुचि यं समवायने ॥
ऋच् श नुत्यां कुच क्रोधपर्ककौटिल्यलेखने ।
कुच् तारशब्दे कुच शि सङ्कोचे कच् रवे कचि ॥
कच् ङ बन्धत्विषोः क्रुञ्च गत्यां कुञ्च च वक्रणे ।
तीच्छ्ये खच ग् भूतिपूत्योरुत्पत्तौ ग्लुञ्चु दुर्गतौ ॥
ग्रुच ग्लुचिरु चौर्य्ये च चञ्चितौ चर्च केङ्समः ।
चर्च जर्च झर्च शुक्तौ भर्त्से तन्चु च सङ्कुचि ॥

तन्च् त्वञ्चि तौ त्वच् श वृत्यां पिञ्च क् छेदे ङु औष्ण्य च ।
पाके पचौ ङ पञ्चिङ व्यक्तीकारे पचि क् ततौ ॥
पृच् कि संयमने पृच् धौ च सम्पर्के पृची ल् ङ च ।
मचि ङुच्छायधृत्यर्चाभाः सु मच् ङ च कल्कने ॥
दम्भे शाठ्ये मुच् मुचि ङ् च मुच् क मोचे मुच् ल्टश्पचौ ।
मोचे म्रुच् म्लुचु इर्गत्यां म्रुञ्च म्लुञ्च मञ्च् मुञ्च च ॥
टु डु याचृञ् याचने रिच् कि सम्पर्कवियोगयोः ।
रिचि ञं धौ विरेके रुच् ङ्लृ प्रीतिप्रकाशयोः ।
लोचृ क् भासि लोचृ ङौचे लुञ्चापनयने वचौ ।
शाचि वच् कच सन्देशे वञ्चौ वाचि विचि लिंधौ ञ् ॥
पृथक्त्वे व्यच शि व्याजे सम्बन्धे कङ् वञ्च वञ्चने ।
वञ्चु गत्यां वर्च ङ् दीप्तौ व्रश्चू श्छेदे वृचो ध् वृतौ ॥
खच खचि शचि क्लृत्यां शच ङ् वाचि शुचिर्यं ञौ ।
शौचे विशरणे क्लेदे शुच् शोके षच् ङ सेचने ॥
षच् सम्बन्धे षञ्च गतौ षिच् प शौञ् चरणे ष्टुच ।
ङ प्रसादे चकारान्ताः पञ्चाशत्समुदीरिताः ॥

---

छान्तवर्गः ।

आच्छायामेऽथोच्छि शुच्छे उच्छी श् बन्धसमापने ।
वर्जनेऽतिक्रमेऽथर्च्छ श् मूर्च्छौ गमनमोहयोः ॥
उच्छ भर्च्छ श भर्त्सोक्त्योः प्रच्छौ श् ज्ञीप्सेऽथ पिच्छ श ।
मिच्छ श् बाधे म्लेछ् कि देश्योक्तौ मुर्च्छा मोहउच्छ्रये ॥
युछ् प्रमादे लाछि लच्छ लक्षणे विच्छ क त्विषि ।
विच्छ श् गतौ वाछि कामे खुर्च्छ स्फुर्च्छा तु विस्तृतौ ॥
हु र्च्छा कौटिल्यके क्रौच्छ लज्जे छान्तोनविंशतिः ।

---

